त्वया तृणानि भोज्यानि वरं हरिणकानने ।
न जातु भिन्नमर्यादैः पुरुषैः सह सङ्गमः ॥ २४ ॥
जन्मान्तरशताभ्यस्ता विषयेषु मतिर्नृणाम् ।
जरद्गौरिव सस्येषु दुःखेन विनिवार्यते ॥ २५ ॥
इह यत् क्रियते कर्म तत् परत्रोपभुज्यते ।
सिक्तमूलस्य वृक्षस्य फलं शाखासु दृश्यते ॥ २६ ॥
अत एव हि नेच्छन्ति साधवः सत्समागमम् ।
सद्वियोगासिलूनस्य मनसो नास्ति भेषजम् ॥ २७ ॥

---

(*c*) शुष्कवृक्षाश्च B; शुष्ककाष्ठं च Cr, GP; शुष्कवृक्षश्च CR(var.), SuB; यर्ख CN(var.); मूर्ष ( °र्ख ) च CS(var.)

( d ) न नमन्ति च फलन्ति च B ( *hypermetric*; भज्यते न च लम्बते SuB; न नमन्ति कदाचन ( °नैः ) CR, CN(var.); भिन्देते चैच मन्येते *sic !*, CS(var.); भजन्ति न नमन्ति च Subh; न नमन्ति भजन्ति च IS; नैव ( नेंव ) मन्यन्ते ( संनेते ) CS(var.); विद्यन्ते [ भि° ] A; नैमवन्यते [ भि° न ] CS(var.); नम° च tr. Cr, GP; तु [ च ] CN, CPS.

**24.** A 23, B 13, C 86.

( c ) गजातु [ न जा० ] ( *sic !* ) A.

**25.** A 24, B 14, C 23; SRHt 260.14 ( a. Vyāsa )

( b ) विषये संगतिर् B; रतिर् [ म° ] C

( c ) जरद्गोर् C; सस्येभ्यो SRHt; शस्येषु or शश्येषु or शष्येषु C(var.).

**26.** A–,B 15, C 24; SRHt 48.1 ( a. Vyāsaśataka ). *ab* also in MBh ( MBh ( Bh )3.247, 35, MBh(R) 3.261.35, MBh(C) 3.15475 ) *cd*, SS(OJ) 13 *cd*. *a* also in PdP, Bhūmikhaṇḍa 95.12.

( *b* ) परत्रोपयुज्यते SRHt

( c ) मूले सिक्तस्य वृ° C.

**27.** A 25; B16; C25; H( HJ 4.81, HS 4.77, HM 4.78, HK 4.83, HP 4.81, HN 4.81, HH 112.11–2, HC 150.17–8 ),

अदाता पुरुषस् त्यागी धनं सन्त्यज्य गच्छति ।
दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति ॥ २८ ॥
मरणान् नापरं दुःखम् उक्तम् अस्तीति पण्डितैः ।
नूनं परगृहद्वारे न ते क्षणमपि स्थिताः ॥ २९ ॥
निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः ।
न हि संहरते ज्योत्स्नां चन्द्रश् चाण्डालवेश्मनि ॥ ३० ॥

---

Sama 1.75, IS 123, SMS 508.

( a ) एवेह B; नैच्छन्ति C(var.)

( b ) साधवस् A, B, C

( c ) यद्वियोग° H ( but HP [var.] as above ); °वियोगानि° ( °गालि° ) H(var.).

**28.** A 26, B 17, C 26; SRHt 17.14 ( a. Bṛhatkathā ), and 215.8 ( a. Śṛṅgāraprakāśa ); Cr 33 ( CR 1.14, CNW 77 *cd/ab*, CNPh 116, CNP II 210, CPS 7.19 ), ŚP 468 ( a. Vyāsa ), SuM 5.15, SR 70.2 ( a. ŚP ), SSB 339.2, SRK 222.5 ( a. ŚP ), IS 2745, Kk 30, Srm 131, SMS 823.

( *b* ) स्वधनं ( °जनं CNP II ) त्यज्य गच्छति ( °छ° ) CNP II, SRHt 74.14 ( 215.8 as above ); सर्वं [ ध° ] CNPh; गच्छति CNW.

( *c* ) दातद्वरं CR(var.); कृपणां CNPh.

( *d* ) मृते० CNW.

**29.** A 27, B18, C 99; SRHt 222.2 ( a. Vyāsa ).

( *a* ) न परं B.

( b ) अन्तीति A.

( d ) न च चणमुपस्थितः C; न मे व······तस्थिताः SRHt.

**30.** A 28, B19, C 27; SRHt 34.2 ( 2. MBh ), Cr 611 ( CN "A", CRC 3.50, CNŚLV 19, CRBh II 8.93, CPS 55. 15 ), H ( HJ 1.63, HS 1.55, HM 1.60, HK 1.61, HP 1.46, HN 1.48, HH 16.1-2, HC 21.16-7 ), MKS 55, Nītimañjarī of Dyā Dviveda 142 *ab* ( only ), ŚP 232,

अपकारमसंप्राप्य तुष्येत् साधुरसाधुतः ।
एष लाभो भुजङ्गेन वेष्टितो यो न दृश्यते ॥ ३१ ॥
शिक्षयन्ति न याचन्ते देहीति कृपणा जनाः ।
अदत्त्वा मादृशो भूया दत्त्वा त्वत्सदृशो भव ॥ ३२ ॥

---

VS 225, SR 46.39 ( a. ŚP ), SSB 302.40, Pras 7.3, SRK 11.15 ( a. Sabhātaraṅga ), IS 3755, Su 138 and 285.

( *a* ) दुर्जनेष्वपि H(var.); दुर्जनेषु IS, निर्गुणेषु CRBh II; सत्वेषु A,B,C; संतेषु IS; प्राणिषु Pras.

( c ) संहरति B, SRHt, VS(var.); संसरति CRBh II; ज्योत्स्नाश् ( °स्ना IS ) C, CRBh II, IS.

( d ) चन्द्र चा° CN(var.); चन्द्रः श्वा ( *sic !* ) IS,; चण्डाल° A,B,C, CN(var.); वेश्मसु A, ŚP,SR, SSB, Pras; °वेश्मनः SRHt, CRC, HK.

**31.** A 29, B 20, C 28; JS 57.8 (a. Bhagavad-Vyāsamuni), VS 372 ( a. Śrībhagavad-Vyāsamuni ), SR 56.102, SSB 318.104 ( a. Vyāsamuni ), SS(OJ) 338.

( b ) तुष्ट···A; तुल्येत् B.

( c ) नैषो ( °ष ) ऽलाभो SS(OJ); विषलांभो A; भुजङ्गस्तु A

( d ) वेष्टितो C(var.); यन्न [ यो न ] A,B,C, JS, VS, SR, SSB; दंशते ( °ति ) C(var.).

**32.** A 30, B 21, C 29; SRHt 228.10 ( a. Vyāsaśataka ). Cf. Cr 1302.

( b ) देहि देहीति याचकः C

( *cd* ) अवस्थेयनदानस्य । भू मा भूदेवं भवनिति B ( hypermetric ).

( c ) अदत्वा A, C; मा भूः A; मा भूद् C.

( d ) दत्वा A,C,······त्सदृशो for the missing *akṣara* suggested तं° or त्व°.

अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत् पुरा ।
तदिदं देहि देहीति विपरीतमुपस्थितम् ॥ ३३ ॥
वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ ३४ ॥
ऐश्वर्यतिमिरं चक्षुः पश्यन्नपि न पश्यति ।
पश्चाद् विमलतां याति दारिद्र्यगुलिकाञ्जनैः ॥ ३५ ॥

---

**33.** A 31, B 22; C–; SRHt 217.3 ( a. Vallabhadeva ), Vet 12.4, Parāśaradharmasaṁhitā 1.1; 178 ( a. Vyāsa ), SR 156.133, SSB 484.135, SRK 226.52 ( a. Prasaṅgaratnāvalī ), IS 7615, SMS 138.

( *a* ) ध्वचरं पदमभ्यस्तं A.

( *b* ) नास्मि नास्ति Vet(var. )

( d ) विपर्ययम् A,B; उपास्थितम् Vet(var.)

**34.** A 32, B 23, C 30; BhŚ 156, Cr 1923 (CNP II 125), ŚP 419, SR 76.4 ( a. BhŚ ), SSB 348.6, SRK 67.6 ( a. Prasaṅgaratnāvalī ), IS 5993, Srm 170. ( Cf. MBh(R) 13.7, 24–5, Harivaṁśa 1644, BhŚ 504, P [ PP 5.63, Pts 1.83, PtsK 5.15 ], HJ Km 11 ), Su 72 and 297, Kk 64–5, IS 2349, 5683 and 5936.

( *a* ) बलिभिर् or वलीभिर् BhŚ(var.); आपन्नं [ आक्रान्तं ] IS.

( *b* ) पलितैरंकितः or फलितैरंकितं or पतितैरंकितं or पलितेनांकितं or पतितैः कंपितं or वलितैरंकितं BhŚ(var.); पलितैरञ्जितं C; शिराः BhŚ(var. )

( *c* ) शिथिलं यांति BhŚ(var.)

( d ) तृष्णेका AB; तृष्णैक or त्रुणिका or तृष्णिका BhŚ(var.)

**35.** A 33, B 24, C 31, SRHt, 205.1 (a. Vyāsa), Sama 2 द 14.

( b ) पश्यत्यपि ( °तापि ) C; पश्यच्चापि SRHt, अपि······न श्यति A

( c ) तस्य निर्मलतायां तु Sama; पश्चान् निर्मलतां C

( d ) दरिद्र्यं परमौषधम् Sama; दारिद्र° C(var.); °गुलिका° B; °काञ्जनात् A.

शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि ।
पक्षपाताद् भवेत् पापं दोषा दोषा गुणा गुणाः ॥ ३६ ॥
असत्संपर्कदोषेण सज्जनोऽपि विगर्ह्यते ।
मार्गस्तिमिरसंपर्कात् समोऽपि विषमायते ॥ ३७ ॥
दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सन् ।
मणिना भूषितः सर्पः किम् असौ न भयंकरः ॥ ३८ ॥

---

**36.** A 34, B 25, C 32; SRHt 191.45 (a. Vallabhadeva). Cf. MBh ( MBh (Bh) *ad* 4.46,12 [ 853* 3–4 ] MBh(R) 4.51.15, MBh(C) 4.1597 ), Cr 979 ( CS 2.97 ), SR 160. 340 ( a. Kk ], SSB 491.347, Kk 99, Pras 13.5, IS 1684 where *cd* reads : युक्तियुक्तं वचो ग्राह्यं न वचो गुरुगौरवात् or सर्वथा सर्वयत्नेन पुत्रे शिष्ये हितं वदेत्, Cf. also JSAIL 30.29 and Crn 120.

( a ) शत्रुरपि CS(var.); गुणो CS(var.); ग्राह्या [ वा° ] MBh (Bh), Pras; वाचा CS(var.)

( *b* ) दोषो CS(var.); वाच्य नरैरपि CS(var.) ; अपी CS(var.).

( *d* ) पातात् B.

**37.** A 35, B 26, C 33; SRHt 231.1 ( a. Vyāsaśataka ), Cr 114 ( CSr 2.57 CKl 50–1 ), IS 7460, Subh. v 118.

( a ) असत्यं CS(var.)

( b ) अधस्ताद्यन्ति ( अधमां °;मा; °र्मा ) साधवः; ( °व; वा ) CS; न गृह्यते A.

( c ) मार्गं तिमिरसंसर्गात् A; मार्गस्तिमिरदोषेण ( मार्गवत्तिमिरं; मार्गस्य च तिमिरकः; मार्गसूतिभिस्यार्क; मेघेषु°; °तिमिरश्चार्कः; °दोषेन ) CS.

( d ) विसमायते CS(var.); विहाम भत्र CS(var.)

**38.** A 36, B 27, C 34; SRHt 41.24 ( a. Sar, but could not be found there ); Cr 466 ( CN 23, CS 3.35, CR 3.29, CNMN 110, CnT II 15.12, CnT III 7.84, CnT V 126, CPS 358.15 ), H( HJ 1.91. HS 1.75, HM 1.88, HK 1.90, HH 20.5–6, HC 27.14–5 ), BhŚ 27, GP 1.112,15,

परापवादे बधिरः परच्छिद्रेष्व् अलोचनः ।
वागुकर्माण्यजारिषु दुःसंकल्पेष्व् अचेतनः ॥ ३९ ॥
महद्भिर् बद्धवैरस्य विपत्तिरपि शोभते ।
दन्तभङ्गोऽपि नागानां श्लाघ्यो गिरिविदारणे ॥ ४० ॥

---

ŚP 354 ( a. Cāṇakya ), VS 355 ( a. Vālmīki, but does not appear in R ), SR 54.5 ( a. H ), SSB 314.6 ( a. Cāṇakya ), SRK 22.1 ( a. Sphuṭaśloka ), SuM 10.7, VP 8.1, NT 164, TP 414, IS 2850 ( a. RT but does not appear there ), Sskṛ 55, Su 89 and 306, Same, 1 द 25, Srm 71, Subh–v.54.

( a ) दुर्जनं ( °न ) CR(var.); परिहर्तव्यः B, CS(var.); परिहतव्या ( °व्ये; °व्यं ) CS(var.); परिहस्तव्योः CS(Vas.)

( *b* ) शास्त्रेगलंकृतोऽपि ( °णां लं° ) सन् ( °लंकारितो यदि ) CS; विद्यालंकारितो यदि CS(var.), CN(var.); विद्ययापि समन्वतः IS; विद्यया भूषितो CN(var.); BhŚ(var.); विद्यालंकृता CS(var.); °लंकृतोऽप्यसन् BhŚ(var.); यदि [ ऽपि सन् ] CN(var.), CS(var.), CR(var.), GPy, BhŚ (var.); सः CN(var.); सत् IS.

( *c* ) मणिनालंकृतः ( °तस् ; °त ) C, SRHt, CN(var.); मणिनः CR(var.); भूषितो ( °त ) CN(var.). CS(var.), CR(var.); मृषितः सर्प CR(var.); सर्पो VS; सर्प CS (var.); नागः [ स° ] BhŚ(var.).

( d ) भवेत् किं न भयंकरः VS, CR(var.); भयंकराम् ( °रम् ) CS(var.).

**39.** A 37, B 28, C35.

( *c* ) षण्डे कमान्यजातिषु B; पङ्गुः कर्मस्वनार्येषु C.

( *d* ) दुस्सङ्कल्पेष्व् ( °स्संक° ) A,C.

**40.** A 38, B29, C36; SRHt 209.2 ( a. Vallabha ), Cr 1775 (CvGt 7.5, CvP IV 7.8, CvH 7.10, CvW 7.9, CvL II 7.11, CNG 242 ), P(Pts 1.373, PtK 1.418 ); also *cd* in Cr 1779 (CvTb 7.17 CM 118) and Cr 1577 ( CvṢ 7.11,

असज्जनेन संपर्काद्   अनयं यान्ति साधवः ।
मधुरं शीतलं तोयं   पावकं प्राप्य निर्गुणम् ॥ ४१ ॥
सुखस्यानन्तरं दुःखं   दुःखस्यानन्तरं सुखम् ।
चक्रवत् परिवर्तन्ते   दुःखानि च सुखानि च ॥ ४२ ॥

---

CvA 7.11 CvL I 7.11 ), ŚP 220, SR 45.10 ( a. ŚP ), SSB 311.11, IS 4746, Su 70; Subh-v. 52.

( a ) महता ( °ता ) प्रार्थनेनैव ( प्रार्थभा नानां; प्राथ्यमामोऽपि; प्रार्थता°; प्राह्रये यसां ) Cr, ŚP, SR, SSB; महता (महद्भिः) स्पर्धमानस्य P; बुद्ध° A.

( b ) विभागोपि ( विपदेव CvW, P ) गरीयसी CvP IV, CvW, P; स्वपक्षणां च संक्षयः CvGt; अविशोभते CvL II; सोभवो IS; शोभना C.

( c ) दंतभंगो CvGt, CvH, CvL II; चिन्तभागो CvP IV; हि [ ऽपि ] A, Cr, PtsK, ŚP, SR, SSB, Cr 1517.

( d ) स्तृत्यः [ श्लृ° ] SR(var.); गोरि° CvGt; पर्वतभेदने SR (var.); विदारिण IS, यद्वन् महारणे Cr 1517.

**41.** A 39, B 30, C 37; SRHt 232.2 (a. Vyāsaśataka), NBh 244.

( a ) संसर्गाद् NBh.

( b ) असतं [ अ° ] NBh.

( c ) शीतळं B.

( d ) तप्यते [ नि° ] NBh ( better ).

**42.** A 40, B 31, C 38; SRHt 262.8 ( a. MBh ), TP 481, IS 7083. *ab* appears very often in MBh. Variant of *ab/dc* of MBh(Bh) 12.168, 18 *ef.* 460* ( MBh(R) 12. 174, 20, MBh(C) 12.6475, Cr 1081 ( CS 2.48, CR 6.51, CNP II 49, CPS 153.52 ), GP 1.113, 61, Vet Hu[1] MS 16.16, IS 7086, Su 181, ŚIT(OJ) 76, ShD(T) 64. Also similar MBh(Bh) 12.26, 23, MBh(Bh) 3.247, 45, Vet 16. 175.

(cd) सुखदुःखे मनुष्याणां । चक्रवत् परिवर्ततः Cr, MBh(Bh) 12.

न विषं विषम् इत्य् आहुर् ब्रह्मस्वं विषम् उच्यते ।
विषम् एकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥ ४३ ॥
देहीति वचनं कष्टं नास्तीति वचनं तथा ।
देहि नास्तीति वचनं मा भूज् जन्मनि जन्मनि ॥ ४४ ॥
आगमादेव नरकाः श्रूयन्ते रौरवादयः ।
विषयित्वं दरिद्राणां प्रत्यक्षं नरकं विदुः ॥ ४५ ॥
निर्धनश् चापि कामार्थी दुर्बलः कलहप्रियः ।
मन्दशास्त्रो विवादार्थी त्रिविधं मूर्खलक्षणम् ॥ ४६ ॥

---

168 *ef.*+460*, GP 1.113, 61, Vet Hu[1] 16.16, Su 181, IS 7086.

**43.** A 41, B 32, C 39; Cr 1616 ( CRC 7.88, CPS 184.27 ), VCsr V.2, AlR 139, AlK 238 *ab,* SR 98.1, SSB 385. 5, IS 3437. Cf. Kūrma-purāṇa in ŚKD *ad* विष.

( a ) आहुः A,B.

( c ) हन्यात् A.

*( cd)* देवस्वं चापि यत्नेन । सदा परिहतेत् ततः Kūrma-purāṇa.

*( d )* तु ससन्ततिम् [ पु० ] AlR.

**44.** A 42, B- C 40; SRHt 195.96 ( a. Vyāsa ) and 238.25 ( a. MBh ).

( b ) ततः [ त° ] SRHt 195.96

( c ) वाक्यं देहीति नस्तीति A; वा वाक्यं [ व° ] C.

( d ) भूद् C.

**45.** A. 43, B 33, C 41, SRHt 228.2 ( a. Vallabhadeva ).

*( a )* आगमान्नरका लोके A,B.

**46.** A. 44 , B 34 ; C 42; SRHt 28.1 ( a. MBh ).

*( a )* सज्जनश् [ नि० ] B

*( b )* दुर्जनः [ दु० ] A,B

*( c )* मन्दशास्त्रोऽपि वादार्थी A

*( d )* निविधं धूर्तलक्षणम् A,B.

अनाहूते प्रवेशश्चाप्य् अपृष्टे बहुभाषणम् ।
स्तुतिश्च स्वात्मवर्णस्य इत्येवं मूर्खलक्षणम् ॥ ४७ ॥
दानं विभूषणं लोके दानं दुर्गनिवारणम् ।
दानं स्वर्गस्य सोपानं दानं शान्तिकरं शुभम् ॥ ४८ ॥
मनसा चिन्तयित्वापि यो न दद्यात् पुनर् नरः ।
स प्रेतो भवतीत्य् उक्तम् अल्पमात्रेण वस्तुना ॥ ४९ ॥

---

**47.** A 46; B—; C 43.

*( ab )* प्रवेश्च न पृष्टे C.

( c ) सा स्तुतिश्चात्मनश्चैव A; स्तुतिश्चात्मवर्णस्य C ( var. ).

( d ) त्रिविधं A.

SRHt 28. 2 ( a. MBh ) has the following verse :

अनहूतः संप्रविशत्यपृष्टो बहु भाषते ।
बलवन्तं च ( वो ? यो ) द्वेष्टि तमाहुर्मूढचेतसम् ॥

which is probably a variant of MBh ( MBh ( Bh ) 5.33. 35, MBh ( R ) 5.32. 40, Mbh ( C ) 5. 1006, Mbh ( Ju ) p. 329 ); L in VCbr after 0.3, PM 1.25, IS 287, SMS 1363 :

अनाहूतः प्रविशति अपृष्टो बहु भाषते ।
विश्वसिति प्रमत्तेषु मूढचेता नराधमः ॥

IS 289, Su 193, SMS 1367 has also the following verse :

अनाह्वाने प्रवेशश्च अपृष्टे परिभाषणम् ।
आत्मस्तुतिः परे निन्दा चत्वारि लघुलक्षणम् ॥

and H ( HJ 2. 49, HS 2. 48, HM 2.52, HK 2.52, HP 2.45, HN 2.44, HH 47. 21-2, HC 63. 11-3 ), SR 163. 476, SSB 495. 476, IS 288, Kt 98, KtR 98, Sama 1 अ 54, SMS 1363 have the following verse :

अनाहूतो विशेद्यस्तु अपृष्टो बहु भाषते ।
आत्मानं मन्यते प्रीतं भूपालस्य स दुर्मतिः ॥

**48.** A 45; B 35; C 44; SRHt 16.1 ( a. MBh ).

( b ) दुःखनिवारणम् C.

( d ) दारिद्र्यनाशनम् [ शा° शु° ] SRHt ; सुखम् [ शु° ] C.

**49.** A 47; B 36; C 45; Bodhicaryāvatāra 4.5.

*( a )* तु [ ऽपि ] A, B.

*( c )* प्रोतो [ प्रे° ] B.

दोषोऽप्यस्ति गुणोऽप्यस्ति निर्दोषो नैव जायते ।
सुकुमारस्य पद्मस्य नालो भवति कर्कशः ॥ ५० ॥
ज्ञानवृद्धास् तपोवृद्धा वयोवृद्धाश्च ये नराः ।
सर्वे ते धनवृद्धस्य द्वारि तिष्ठन्ति कातराः ॥ ५१ ॥
मातृवत् परदारांश्च परद्रव्याणि लोष्टवत् ।
आत्मवत् सर्वभूतानि यः पश्यति स पश्यति ॥ ५२ ॥

---

( *d* ) अल्पमालेव सत्त्विति; आलेव सात्वेति ( *sic !* ) B ( *contra metrum* ); अल्पमात्रेऽपि वस्तुनि Bodhic.

**50.** A 48; B 37; C 46; Cr 496 ( CS 2.64, CKl 53 ), IS 2988, Su 194 and 259, Ślt ( OJ ) 46.

( *a* ) दोषाप्यस्ति ( °षोप्य० ) CS(var.); गुणोप्यस्ति CS(var.).

( *b* ) निर्गुणेष्वपि ( सामान्येष्वपि ; °णोष्वपि, °णेष्वेपि ) जन्तुषु ( वस्तुषु CSBD; जायते as above CSC ) CS; निर्दोषो नैव जायते Su.

( *c* ) सुकोमलस्य ( सुमाकु° CS[var.] ) Subh, CS (var.); सुकुमार ( सूकू° ) CS(var.).

( *d* ) नाळो A, B; नाले Su; नालं CS(var.); भवन्ति CS(var.); कर्कशं ( °श ) CS(var.); कण्टकः [ क° ] Su.

**51.** A 49; B 38; C 47; SRHt 202.2 ( a. Vyāsa ).

( *a* ) °वृद्धा वयोवृद्धस् C; तपोवृद्धाः B.

( *b* ) तपोवृ° C.

( c ) विभववृधस्य [ ते ध° ] B.

( d ) द्वारे C; कतरः C(var.); ते नराः [ का° ] B; वारिताः [ का° ] SRHt.

**52.** A 50; B 39; C 48; Cr 772 ( CV 12. 14, CN 3, CRCa II 18, CnT II 19.6, CnT III 52. 1, CPS 296. 19 ), P ( PT 3.63, PTem 3.49, PS 3.39, PN, 3.52, PP 1.390, Pts 1.402, PtsK 1.450, PRE 3.52, PM 1.173 ), H ( HJ 1.13, HS 1.12, HM 1.13, HM 4.132, HN 4.132, HK 1.14 and 4.134, HM 8.17–8, HC 11.15–6 and 159.12–3 ), GP 1.111, 12, Vet 16.12, BrDh 2.11, 8 ( 95* ), SR 159. 254

**कोकिलानां स्वरो रूपं नारीरूपं पतिव्रतम् ।**
**विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् ॥ ५३ ॥**

---

( a. Cāṇakya ), SSB 488. 261, SuM 26. 8, SuB 5. 5, Sama 1 म 25, IS 4805, Sskṛ 53, Su 178, TP 383, NT 6, DhN ( P ) 53, Old Syriac 6. 36.

*( a )* परदाराणि A, B, C(var.), PP, Pts, PS(var.), Vet (var.), SR, SSB; परदारेषु CN ( but CNG as above ), CV(var.). H, PN, GP, Vet, Sama; परदाराश्च CN(var.), SuM; परदारेऽपि IS; परदारंस्तु PT, PRE, परद्रव्याणि ( °णी ) HP(var.); परद्रव्येषु IS.

*( b )* परद्रव्येषु CN (but CNI I, CNG as above), CV(var.), H (with the exception of HC), GP, Sama; परद्रवेषु HC; लोष्ठ्रवत् CN(var.), PP, HJ, HS,HN, HK 4.134, HH, HC; लोष्ठवत् A, B, CV(var.), HK 4. 134, PS, Sama; लोष्टवत CN(var.), स्येष्ठवत् CV(var.).

*( c )* सर्वभूतेषु CN ( but CNG as above ), CV(var.), CPS, H ( but HP as above ), GP, Sama; सर्वभूतानां PRE (var.), सर्वसत्वानि SuB.

*( d )* पश्यन्ते ( वीक्षन्ते PP ) धर्मबुद्धयः Vet (var.), PP; वः [यः] CV(var.); पच्यति [ प° first ] CN(var.), न [ स ] A; पच्यति [ प° second ] IS; पण्डितः [ प° second ] CN ( but CNG, CNI I as above ), CV(var.), CPS, PP, H (but HS as above), GP, Sama; वैष्णवः [प° second] CN(var.), SuB; बुद्धिमान् [ प० second ] Vet(var.), धर्मवित् CRCa II.

**53.** A 51; B 40; C 49; Cr 303 ( CV 3.9, CN 44, CS 1.12 *cd/ab*, CL 7. 5, CvH 7.11, CRC 7.23, CPS 57.20 ), H ( HJ 1.212, HH 35. 7–8 ), Vet 9.17, Śts 324. 21–2, SR 161. 380 ( a. Cāṇakya ), SSR 492. 387, Pras 5.11, Sama 1 क 73, IS 1919, NT 64, TP 399, Su 162, LN (P) 94, DhN (P) 256, NKy (B) 122, cf. NŚ (OJ) 2.6; cf. RDh (M) 37. ( Cf. Cr 302 ( CR 1.27, CPS 208.84 ), Cr 345 ( CS 1.44, CL 7.7, CR 8.113 ), Vet *ad* 7.25, 9, ŚP 292,

असंतुष्टा द्विजा नष्टाः संतुष्टाश्च महीभृतः ।
सलज्जा गणिका नष्टा निर्लज्जाश्च कुलाङ्गनाः ॥ ५४ ॥

---

SR 81.5, SRK 52.3, IS 2143, Su 223 ). Cf. JSAIL 24.83.

*( a )* कोकिलानां CV(var.); कोकिरनां CS(var.); कोकिलाना° CN (var.); कोकिलस्य CRC; स्वरं A, B, H, CV (var.), CvH, CS(var.), CN(var.), Śto (var.); स्वर° CL(var.), CN(var.); स्वरा CN(var.).

( b ) पतिव्रत्यं ( याति° ) तथा स्त्रीयाम् CV(var.); पतिव्रत्यं तु योषिताम् A, B, Śto NT, TP; स्त्रीणां पतिव्रतं रूपम् CN (var.); स्त्रीणां [ ना° ] CV ( but $Bn_2$ as above ), CN (var.), CPS, Sama, Pras; स्त्रीरूपं च Vet (var.); नालि° CS(var.); पतिव्रता ( °तां CN [var.]; °प्रता CN(var.); °वृता Vet [var.] ). CN(var.); Vet (var.); पविव्रत CN (var.); सलज्जता [ प० ] CN(var.).

*( c )* वीद्या रूपं कुरु° CV(var.); तु विप्राणां [ कु° ] A, B; अरूपाणां [ कु° ] C; रूप° CV(var.); °रूपाणा ( °नां ) CS (var); CN(var.).

*( d )* शान्ति [ च० ] CL(var.); विरूपाणां CV(var.). TP,NT; रुपं CV (var.); तपस्वीनाम् CV(var.); तपस्विन ( °नः ) CL(var.), CN(var.); तपस्विना CS(var.); तपेस्वरी CN (var.).

**54.** A 52; B–; C 52; SRHt 236. 2 ( a. Vyāsaśataka ); Cr 110 ( CV 8.18, CN 78, CL 4.3, CR 8.130, CSLd 3.80, CnT II 10.9, CnT III 7.18 [ cf. 3.7 ], CnT V 34, CnT I. 17, CPS 261. 109 ), H (HJ 3.67, HS 3.64, HM 3.64, HP 3.62, HN 3.62, HK 3.64, HH 85. 5–6, HC 113, 5–6), P ( PX 1.6, PKS 10 ), SR 162. 411 ( a. Cāṇakya ), SSB 493. 418, VP 9.63, Sama 1 अ 11 and 2 अ 2, NBh 178, IS 755, NT 42, LN (P) 117, DhN (P) 353 v. l., NKy( B ) 145, NŚ(OJ) 4.24, TK(OJ) 28, ( Cf. Samayamātṛkā 4.68 and 4.70 ).

*( a )* असंतुष्टो द्विजो A, SRHt, CN(var.), P, NBh; असंतुष्टो C, CL (var.); असंतुष्टः CV (var.), CL (var.); असंतोषा CL

कृतस्य करणं नास्ति प्राग् एवातः परीक्ष्यताम् ।
अविचिन्त्य कृतं सर्वं पश्चात् तापाय वर्तते ॥ ५५ ॥
रागो नाम मनःशल्यं गुणद्रविणतस्करः ।
राहुर् विद्याशशाङ्कस्य तपोवनहुताशनः ॥ ५६ ॥

---

(var.); द्विज CL (var.); यतिर् [ द्वि ] C; नष्टा CV (var.), CL(var.), CN(var.), CR(var.), HH; नष्टः A, CL(var), PKS; नष्टः C, NBh.

(*b*) संतुष्टा इव पार्थिवा CN, HS, HM, HH, HP (var.); संतुष्टाः पृथिवीभुजः CR ( but CRP, CRBh I as above ); संतुष्टाः पृथिवीपतिः CN(var.); संतुष्टाः ( °ष्ट HS ) पार्थिवाः (°व HS; °वास् HN, HP ) सदा ( तथा ) CN (var.), HN, HJ, HM, HN, HH, HC, HP(var.); संतुष्टतश्चैव पार्थिवाः ( °थि° ) CN ( var. ), PKS; संतुष्टाश्च महीभृतः ( °भुजः ; पतेः ; पतिः ) CR (var.), HK, Sama; संतुष्टश्च ( संतोषेणो ) महीपतिः C, CL( var. ); °तुष्टः क्षत्रियस्तथा PX, SRHt, NBh; संतुष्टा च CV (var.), HP; संतोषेण CL (var.); महीभुजः CV(var.), SR, SSB; महीपतिः ( °ति ) C, CL, CV(var.), HP (var.), Sama 2; पृथिवीपतिः CV (var.); तु पार्थिवाः CL(var.); चैव पार्थिवाः CL(var.).

(*c*) सलज्जा CL(var.); गणका CL (var.); नष्टाः CV(var.); लज्जा [ न° ] CN(var.).

(*d*) निर्लज्जा यत् कुलाङ्गना PX; निर्लज्जा A, C, SRHt, CV(var.), CL(var.), HJ, PKS, Sama; पण्यस्त्रीभिः NBh; निर्लज्जाः सुकुला° CN(var.), निलज्जेव NT; व [च] CN(var.); कुलाङ्गना C, SRHt, CN(var.), HS, HP (var.), PKS, Sama; कुलस्त्रियः CL (var.), CN (var.), CR (var.), HS, HP, HM, HN, HK, HH, SR, SSB; कुलयोषितः CN(var.).

**55.** A 53; B 41; C 53; SRHt 191.43 ( a. MBh )

(*b*) अवातः A; परीक्ष्यता A.

(*c*) अपिचिन्त्य A; पापं [ स० ] A; कार्यं B; कर्म C.

(*d*) जायते [ व° ] B; कल्पते [ व° ] SRHt.

**56.** A 54; B 42; C 50, SRHt 259.1, ( a. Vyāsaśataka ).

रूपयौवनसंपन्ना विशालकुलसंभवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ ५७ ॥
शास्त्रकाव्यविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा ॥ ५८ ॥

---

(*a*) मनश्शल्यं (°स्यो C) A, B, C.

(*c*) राहर् A.

(*d*) शीलेध्मस्य हु° B; °हुताशनः (for °सनः) C(var.).

**57.** A 56; B 43; C 51; Cr 876, (CV 3.8, Cv 3.2, CN 5, CLP IV 7.5, CLH 8.6, CRT 8.44, CnT II 4.3, CnT III 3.3, CnT VI 41, CnT V 104, CPS 56.17), H (HJ Km 39, HS Km 38, HM Km 39, HN Km 24, HN Km 39, HH Km 4. 22–3, HC 7. 3–4), SR 39.9, SSB 292.9, SuM 10*, ŚKDr *ad* निर्गन्धं, IS 5795, Su 8 and 232, NŚ (OJ) 2.7, Ślt (OJ) 24, ShD(T) 224, LN(P) 36, DhN(P) 17, NKy(B) 54. Cf. JSAIL 24.46.

(*a*) रुप° CV(var.); रूपलक्षण° CN(var.); रूपलावण्यसंयुक्ता SuM; °संपना CN(var.).

(*b*) वीश° CV(var.); °संभवा B, CV(var.); °वान्धवाः CN(var.).

(*c*) वीन° CV(var.); वित्त° CN(var.); °हीनो CN(var.); °हीनं IS; सोभन्ते CN(var.).

(*d*) जारगर्भा (जान° Cv[var.].) इव स्त्रियः CN(var.), CLP IV; नीर्ग° CV(var.). निर्गन्धः किं° इव Cv(var.), CN(var.), CN(var.), SR, SSB; किं`इ° tr. CN(var.), CLH; किंशुकः IS; किंशक Cv(var.); किंशुका CN(var.), CV(var.).

**58.** A 55; B 44; C 54, SRHt 237.15, (a. MBh), Cr. 1362, (CNN 7, CNP II 193, CNI I 230, CNG 179, CNT IV 242, CNM 189, CnT II 14.6, CnT III 7.65, CnT V 105), PP 2.17, H (HJ Km 48, HS Km 48, HM Km 48, HK 1.1, HP Km 32, HN Km 32, HH Km 48, HC Km 8.13–4), Vet Intr 32, MK(S) 90, VCsr 1.3, ŚP 202,

भुक्त्वा निविशतः स्थौल्यं तिष्ठतो बलवर्धनम् ।
आयुश् च क्रमतो नित्यं मृत्युर् धावति धावतः ॥ ५९ ॥
प्रस्तावसदृशं वाक्यं स्वभावसदृशं प्रियम् ।
आत्मशक्तिसमं कोपं यो जानाति स पण्डितः ॥ ६० ॥

---

SR 153.23. ( a. ŚP ), SSB 480.23, IS 1711, Su 224, Cf. JSAIL 34.52.

( *a* ) काव्यशास्त्रवि° Cr, PP, H, Vet, MKS; गीतशास्त्रवि° ( °शी° CNI I; गीतवाद्य° ) CNI I, CNI IV, CnT, Vet(var.), PP(var.), ŚP, SR, SSB; काव्यगीतवि० PP (var.); काव्य(गी)तशास्त्रवि° PP(var.). ( *hypermetric* ); वेदशास्त्रवि० VCsr.

( *b* ) गधति CNI I, HS; दृत्वति [ ग° ] CNM; धीमता CNM.

( *c* ) तु [ च ] Cr ( but CNM as above ), H ( with the exception of HJ, HM, HK, HH, HC ), Vet, MKS, VCsr, SR, SSB; हि [ च ] CNI I, PP, D in Vet, ŚP; मूर्खानां C.

( *d* ) व CNI I; च [ वा ] B, CNP II, PP(var.).

**59.** A 57; B 45; C 55; SRHt 238.26 ( a. MBh ).

( *a* ) उक्त्वा [ भु° ] A; निविशित° A; तु विशत B; निषीदनः C; SRHt has only निविशतः and the editor adds (ल्यं ? स्थौल्यं).

( *b* ) तिष्ठत्यपि बलीष्यले A.

( *c* ) चङ्क्रमतो C.

VCsr 23.6 and VCjr 1 have the following verse :

भुक्त्वोपविशतस् तुन्दं भुक्तं संविशतः सुखम् (बलमुत्तानशायिनः VCjr) ।
आयुष्यं क्रममाणस्य ( आयुर्वामकटिस्थस्य VCjr ) मृत्युर्धावति धावतः ॥

**60.** A 58; B 46; C 56; SRHt 26.2 ( a. MBh), Cr 695 ( CV 14.15, CR 2.20, CNW 47, CNN 2, CNPh 102, CNI I 17, CNG 135, CNHU 9, CNT IV 123, CNN 120, CNMN 87, CPS 328.30 ), H (HJ 2.48, HS 2.47, HM 2.51, HP 2.44, HN 2.43, HK 2.51, HM 47.18–9, HC 63.8–9 ), Śto 322.33–4, SR 158. 250 ( a. Cāṇakya ), SSB 488.257,

परलोकोऽस्तु वा मा वा   त्याज्यमेवाशुभं बुधैः ।
यदि नास्ति ततः किं स्याद् अस्ति चेन् नास्तिको हतः ॥६१॥
विद्वत्त्वं च नृपत्वं च   नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा   विद्वान् सर्वत्र पूज्यते ॥ ६२ ॥

---

VP 9.73, NT 48, Sama 1 प 55, IS 4287, Kk 97, Su 193, LN(P) 29. ( cf. DhN(P) 30. Cf. K. 97 ). Cf. JSAIL 24.41.

( *a* ) प्रस्तावसदृशी CNM, CNMN.

( *b* ) सद्भावसदृशं H, SR, SSB, Sama; स्वभाव Śto (var.); सम्दसदृशं CNI I, प्रस्तावसदृशं CPS; प्रभावसदृशं ( °वै° ) CV(var.); °सदृशी क्रियम् NT; °सदृश IS, वचः [ प्रि० ] CNM, CNMN; मनः [ प्रि० ] CR.

( *c* ) आत्मसमं ( °शक्ति° om. ) CRBh I; आत्मशक्ति समं CNMN; आत्मसदसमं CV(var.); क्रोधं ( °धं ) [ को० ] Śto, SRHt.

( *d* ) कुर्वाणो न विनश्यति SR, SSB; कोपं जोजानाति स CNMN; यानाति [ जा० ] IS.

**61.** A 59; B 47; C 57; SRHt 13.9 ( a. MBh ).

( *a* ) मा वास्तु [ वा मा वा ] A; व मास्तु [ वा मा वा ] B.

( *b* ) कार्यम् [ त्यज्यम् ] A, B; एव शुभं A, B.

( *c* ) स्यात् A.

( *d* ) हितः A.

**62.** A 60; B 48; C 58; SRHt 26.1 ( a. MBh ), Cr 939 ( CN 1, CS 1.46, CL 6.9, CNPN 34, CnT II 10.12 and 30.4, CnT III 7.22, CnT V 38, CnT I 20, CnV II 91, CPS 37.32 ), P (Pts 2.52, PtsK 2.56 and 129), VCjr 94, BhŚ 743, VS 3426, SR 38.7 ( a. VS ), SSB 291.7, SRK 32.6 ( a. H ), Pras 8.7, IS 6109, Sskṛ 53, DhN(P) 31 ( cf. 15 ), ShD(T) 135 and 227, cf. SRN(T) 43. Cf. A. Weber's *Indische Studien* 15.337, Verse 113 in A. Weber's Siṁhāsanadvātriṁśikā and H. Duncan's Love Songs and Proverbs of Tibet, No. 612. Cf. Crn 78.

प्रत्यहं प्रत्यवेक्षेत धीमान् आत्मनि वेष्टितम् ।
किं नु तत् पशुभिस् तुल्यं किं नु सत्पुरुषैर् अपि ॥ ६३ ॥

यः करोति नरः पापं न तस्यात्मा ध्रुवं प्रियः ।
आत्मनैव कृतं पापम् आत्मनैवोपभुज्यते ॥ ६४ ॥

देहीति वचनद्वारा देहस्थाः पञ्च देवताः ।
सद्यो निर्यान्ति तं त्यक्त्वा ह्रीश्रीधीधृतिकीर्तयः ॥ ६५ ॥

---

( *a* ) विद्वंश्चैव नृपश्चैव CN(var.); विद्यावलं च नृपतिं .IS; विद्वत्त्वं CL(var.); विद्यात्वं CS(var.); च second om. Pras.

( *b* ) न हि तुल्यपरक्रमः( °मः; °मौ ) CS; नैका VCjr(var.); नैतत् VC(var.); न हि CN(var.); कदाचः CL(var.); कदाचनः CL(var.).

( *c* ) पूजिते CS(var.), CL(var.); पूजितो CS(var.), BhŚ; पूज्यतो IS.

( *d* ) विद्वन CL(var.); विद्या CS(var.); पूजितें ( °जे° CS[var.]; °तः CS[var.]) CL(var.), CS(var.); पूजयत् CS(var.).

**63.** A 61; B 49; C 58a; ŚP 1421, SR 153.2 ( a. ŚP ), SSB 480.2, IS 4240, Su 66, SS(OJ) 321.

( a ) प्रत्यविक्षेत Su.

( b ) नरश्चरितमात्मनः ŚP, SR, SSB, Su; ह्यात्मनो वृत्तमात्मना SS(OJ); आत्मविचेष्टितम् A, B.

( *c* ) तु [ नु ] A; चेत् [ तत् ] C; मे [ तत् ] ŚP, SR, SSB, Su, SS(OJ).

( *d* ) किन्नु SS(OJ); तु [ नु ] A; °षैः समम् SS(OJ); इति [ अपि ] ŚP, SR, SSB, Su.

**64.** A 62; B 50; C 59; SRHt 49.9 ( a. Śrī Viṣṇupurāṇa ), P(PP 3.152, PtsK 3. 174 ), IS 4999, SS(OJ) 330.

( *b* ) तस्माद् ( यस्माद् ) आपद् ( आवद् ) ध्रुवं हतः ( गतः ) A,B; ततः स्वात्मवधप्रियः C;

( c ) आत्मना निचितं C; आत्मना हि कृतं P.

( d ) नान्यैर् एवोप° C; आत्मनैव हि भु° P; आत्मनैवापि भु° SS(OJ).

**65.** A 63; B 57; C 60; BhŚ 555, SR 73.6 ( a. BhŚ ), SSB 343.6, SRK 60.15 ( a. ŚP ), Srm 145.

न कश्चित् कृपणो नाम दाता वापि न विद्यते ।
अर्थिभाग्यविशेषेण दाताऽपि कृपणायते ॥ ६६ ॥

जन्मान्तरसहस्रेषु वियोगः संगलक्षणः ।
तथापि प्रणयश् चैव प्रियसंगममीहते ॥ ६७ ॥

संसारविषवृक्षस्य द्वयम् एवामृतं फलम् ।
सुभाषितरसास्वादः सज्जनैः सह संगमः ॥ ६८ ॥

---

( a ) वचनं श्रुत्वा BhŚ, SR, SSB, SRK; वचनाद्वारे BhŚ(var.); °द्वारद् C(see *b*).

( *b* ) आत्मस्थाः C(see *a*); हृदिस्थाः SRK.

( *c* ) तत् क्षणादेव नश्यन्ति BhŚ ( but some texts निर्यान्ति तद्वचः श्रुत्वा ); मुखान्निर्गत्य गच्छति SR, SSB, SRK.

( *d* ) ह्रीधीश्री° BhŚ; श्रीह्रीधी° C(var.), SR, SSB, SSK.

**66.** A 64; B 52; C 61.

( *a* ) न om. A; कश्चिन्न [ न क° ] B.

( c ) अर्थिनो भाग्यशेषेण C(var.).

**67.** A 65; B 53; C 62. *ab* also in H(MS) ZDMG 61.354.

( *a* ) °सहस्राणि H.

( b ) वियोगस्संग° A, B; सहसङ्गमः C; सङ्गमः क्षमः H.

( c ) तथाप्यतिघृणं ( °णः or °ण– ) चेतः C.

**68.** A 66; B 54; C 63.

( c ) °स्वादं A; °स्वादस् C.

( d ) सज्जनेः A; सज्जनैस् C.

Cr 1019 ( CV 16.18, CLS 8.11, CNP II 209, CNG 258, CNT IV 215, CNM 178, CNMN 143, CNB 134, CnT VII 69, CnT II 288, CPS 294.15 ), H (HJ 1.162, HS 1.145, HM 1.151, HP 1.117, HN 1.118, HK 1.153, HH 28.23-4, HC 39. 1-2) v. l., VN 3 v.l., SR 29.4 ( a. H ) and 88.2, SSB 47.4, and SSB 371.2, Sama 1 स 81, SuB 11.12, SRK 1.3, IS 6636, Su 279 have the following two verses :

त्यज दुर्जनसंसर्गं        भज  साधुसमागमम् ।
कुरु पुण्यम् अहोरात्रं        स्मर नित्यम् अनित्यताम् ॥६९॥

---

संसारकटुवृक्षस्य द्वे फले अमृतोपमे (or एवामृतवत् फले)।
सुभाषितं च सुस्वादु ( or as above CNP II, SR, SSB, SRK, SuB ) संगतिः सुजने जने ( or सज्जनैः सह ) ॥ and
संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे।
काव्यामृतरसस्वाद आलापः सज्जनैः सह ॥

69. A 67; B 55; C 64; Cr 428 ( CV 14.20, Cv 6. 17, CN 'B', CS 1.100, CR 2.11, CNB 25, CnT II 9.4, CnT III 6.12, CnT II 102, CnT V 42, CnT I 24, CPS 294.13 ), H (HJ 3.23, HH 77.20-1, HS *ad* 3.22 ), BhŚ 519, GP 1.108, 26, ŚP 734, IS 2621, TK (OJ) 43, LN (P) 42 DhN (P) 408, NKy (B) 59. Cf. JSAIL 24.55.

( *a* ) त्यजेद् CS(var.); त्यजं CR(var.); प्रज CN(var. ); °सर्गं ( °र्गा ) CN(var. ), CS(var.); CR(var.).

( *b* ) भजेत् CN(var.); साधू° CS(var.); साधुसमागम CS(var.).

( *c* ) पुण्येमहोरात्रं CS(var.); अहोरात्रि (°त्र CS[var.]; °त्रौ CR [ var. ] ) CN(var.), CS (var.). CR (var.).

( *d* ) त्यजमिथ्याप्रलापनम् (?) CN(var.); स्मरं CS(var.), नित्येम् (°त्य) CS(var.); नित्यं नजीवितं CN(var.); अनित्यतः (°ताः BhŚ; Cv[var.] ), CV(var.), Cv(var.), BhŚ; अलाभयम् CR(var.); आलत्यता CS(var.); अनित्येताम् CS(var.); भज नित्यम् BhŚ (var.).

**C adds** after verse 64 following two unknown verses :

1* यद् अनर्थेषु सामर्थ्यम्   अर्थेष्व् अपि च विद्यते ।
हस्तस्थं न भवेत् कस्य   सर्वीयं सौगतं पदम् ॥ 65 ॥
( also quoted in Subh-v. 51 )

2* शास्त्राविवेके यद् दुःखं   तद्विवेके च यत् सुखम् ।
नरके स्वर्गलोके वा   न तद् दुःखं न तत् सुखम् ॥66॥

( *a* ) सामार्थ्यम् (var.).

( *c* ) तस्य [ कस्य ] (var.).

( *d* ) सर्वयं (var.).

( *e* ) शास्त्रविवेके (var.).

( *f* ) सद्विवेके (var.).

अव्यवस्थितचित्तस्य प्रसादोऽपि भयंकरः ।
व्यवस्थितः प्रसन्नात्मा कुपितोऽप्यभयंकरः ॥ ७० ॥

विपत्तौ किं विषादेन संपत्तौ विस्मयेन किम् ।
भवितव्यं भवत्य् एव कर्मणाम् ईदृशी गतिः ॥ ७१ ॥

कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥ ७२ ॥

---

**70.** A 68 *cd/ab*, B 56 *cd* only ( *ab* om. ), C 67; SRHt 193.74 ( a. MBh ), PSh 2.22.
( a ) °चित्तस् तु C.
( b ) प्रसन्नोऽपि C; दयंकरः [ भ° ] A ( see *d* ).
( c ) व्यवस्थितप्रस० PSh.
( *d* ) ऽप्ययंकरः A ( see *b* ).

**71.** A 69; B 57; C 68; SRHt 49.10 ( a. Śrī Viṣṇupurāṇa ).
( *c* ) विष्मयेन C(var.).
( *d* ) इदृशी C.

**72.** A 70; B 57a; C 69; Cr 304 ( CV 3.13, CN 71, CL 3.8, CvH 7.12, CNPh 41, CnT II 9.5, CnT III 5, CnT VI 43, CnT V 47, CnT VII 1, CPS 80.70 ), P ( PT 1.17, PTem 1.14, PS 1.20, PN 2.15, PP 1.22, Pts 2.50 and 121, PtsK 1.22, PRE 1.19, PM 1.24, PD 315. 224 ), H ( HJ 2.11, HS 2.11, HM 2.13, HP 2.12, HN 2.12, HK 2.13, HH 41. 19-20, HC 55. 9-10), VC ( VCsr 20.9, VCjr 20.4 ), VS 313 and 2800 ( Later a. P. ), SuM 9.37, SR 162. 404 ( a. Cāṇakya ), SSB 493. 411 ( a. P. ), ŚKDr *ad* प्रियवादी ( a. Cāṇakya ), IS 1926, Old Syriac 1.11, ShD (T) 232. Cf. KSS 10.61, 121. Cf. JSAIL 24.34.
( *a* ) हि [ अति° ] CV(var.); कियान् CN(var.); कोपिभारस् PS (var.); °भारस् C, PT, PD; °मार CN(var.); समार्थानां (°मां) CL(var.).
( *b* ) को दुरो CN(var.); दूरे VCjr(var.); CL(var.); दुरि CN (var.); व्यवशा° CN(var.).

कर्तुम् इष्टम् अनिष्टं वा    कः प्रभुर् विधिना विना ।
कर्तारम् अन्यम् आरोप्य    लोकस् तुष्यति कुप्यति ॥ ७३ ॥

आचारः कुलम् आख्याति    देशम् आख्याति भाषणम् ।
संभ्रमः स्नेहम् आख्याति    वपुर् आख्याति भोजनम् ॥७४॥

अलसो मन्दबुद्धिश्च    सुखितो व्याधिपीडितः ।
निद्रालुः कामुकश् चैव    षडेते शास्त्रवर्जिताः ॥ ७५ ॥

---

*(bd)* tr. VC(var.).

( *c* ) विदेशस् C, PT, PD; विदेश CN(var.); सुविद्यानां C, CV (var.), CN(var.), CL(var.), PS(but C in PS as above), PP( but A, *psi*, PLM in PP as above ), Pts 2.121, PRE, VC( but ASG in VCjr as above ) SuM; सुविर्याणां VCjr(var.); समार्थानां VCsr(var.); पल्लितानां ( *sici !* ) CN(var.).

( *d* ) कोऽप्रयः CV(var.), CPS; कोऽप्रिये CL(var.); कोऽप्रियः CL(var.), SuM(var.).

**73.** A 71; B 60; C 72, SRHt 51. 5 ( a. Vallabhadeva ).

( *a* ) कर्तुर् SRHt.

**74.** A 72; B 58; C 70; Cr 130 (CV 3.2, CR 8.77, CNP I 15, CNPh 95, CNPN 38, CNI I 213, CNG 26.6, CNM 14, CnT II 11.8, CnT III 7.30, CnT V 52, CPS 5.2 ), GP 1.115. 74, IS 870, Sama 1 आ 41, TK(OJ) 49, NŚ(OJ) 28, Ślt(OJ) 81. Cf. Śivapurāṇa, Śatarudrāsaṁ 34.18.

( *a* ) आचार CNPh; आचारकु° CR(var.); आख्यतिर् ( °ती ) CV(var.); विख्याति CNPN.

( *b* ) देशाम् CV(var.); आख्यती CV(var.); विख्याति CNPN; भाषितम् CR ( but CRBh II as above ), CNP I, CNPN; भाषणः CNPN; जल्पितं [भा°] CNMN, CNM.

( *c* ) संगमः CR(var.); संभ्रम CV(var.); संमानः CNG; आदरः CV(var.); आनन्दः CR(var.); आख्यातिर् ( °ती ) CV (var); विख्याति CNPN.

( *d* ) आख्याती CV(var.); विख्याति CNPN; भाजनं CV(var.); व°……°ति repeated twice CNI I.

**75.** A 73; B 59; C 71, Cr 1192 (CNF 48), SuB 3.20, IS 642, Su 112.

किं करोति गुणौघस् ते सरावपुटदीपवत् ।
वसुधाम्बरपर्यन्तं विनिवारितलोचनः ॥ ७६ ॥
अपि चण्डानिलोद्धूत- तरङ्गस्य महोदधेः ।
शक्यते प्रसरो रोद्धुं नानुरक्तस्य चेतसः ॥ ७७ ॥
साधवो यादृशा लोके सागराश्च न तादृशाः ।
साधवो यान्ति मर्यादां युगान्तेऽपि न सागराः ॥ ७८ ॥
सभायां योषितां मध्ये बहवः खड्गधारिणः ।
असिसंघट्टसञ्जात- विष्फुलिङ्गेषु दुर्लभाः ॥ ७९ ॥

---

(*b*) सुखी च Cr, SuB, IS; सुखिनो Su.
(*c*) चेति [ चैव ] C.

**76.** A 74; B–;C 73.
(*b*) शरावपुट° A.
(*c*) वासुधापारपर्यन्तो A.
(*d*) अनिवारितगोचरः C.

**77.** A 75; B—; C 74; Cr 1136 ( CRT 7.4, CRC 7.10, CPS 187.35 ), GP 1.114, 8, IS 423, Su 77, SMS 2009.
(*ab*) अति° [ अपि ] Cr, IS, Su; अपि कल्यानिलस्यैव GP; °लोद्भ्रत—C(var.).
(c) शक्येत C; प्रसभं रोधो ( रोद्धुं ) Cr; वचसा [ प्र० ] A; बोद्धुं GP; रोण्ढुं ( °ढुं ) C(var.).
(d) ननु० A; नह्यरक्तस्य GP; ननुषक्तस्य ( °सक्त° or °शक्त° ) C(var.).
**A. After 75** has an incomplete verse 76 not found any- where else reading :
**3.** गुणदोषाश्चापि·········
अनन्वयात् प्रथमो राशिः अभावादेव पश्चिमः ॥

**78.** A 77; B—; C 77. Cf. above No. 12.
(*b*) सागरा न हि ता° C.
(c) साधवः पान्ति C.

**79.** A 78; B—; C 75; Subh-v 99.

म्रियते मानम् आपन्नो न च याति पराभवम् ।
शिलास्तंभोऽतिभारेण भिद्यते नैव नम्यते ॥ ८० ॥

सतां स्वल्पमपि द्रव्यं कूपे जलम् इवाश्रयेत् ।
प्रभूतमप्यसाधूनां द्रव्यं जलम् इवार्णवे ॥ ८१ ॥

वरं तस्करसंबन्धः साधुभिः सह सङ्गमात् ।
तस्करो हि हरत्यर्थं साधुस्तु हृदयं हरेत् ॥ ८२ ॥

महत्स्व् अपि स्वदुःखेषु त्यक्तधैर्याः कृपात्मकाः ।
मृदुनाप्यन्यदुःखेन कम्पन्ते यत् तद् अद्भुतम् ॥ ८३ ॥

नोदयाय विनाशाय बहुनायकता ध्रुवम् ।
नो नमिष्यन्ति नश्यन्ति पद्मान्य् अर्कैस् तु सप्तभिः॥ ८४ ॥

---

( a ) यो पीतां A.

( d ) विस्फुलिङ्गेषु C.

**80.** A 79; B—;C 76; SRHt 126.3 ( a. Vyāsaśataka ).

( a ) न य० च tr. SRHt.

( d ) भिद्यते नावनम्यते A.

**81.** A 80; B—; C 89; Subh-v 114.

( *a* ) महत्सात्पमपि A.

**82.** A 81; B—; C 92; SRHt 34.9, ( a. Bṛhatkathā ).

( a ) साधुभिस्सह A, C; सुजनैः [ सा° ] SRHt.

( c ) ऽपि [ हि ] A.

**83.** A 82; B—; C 88; Jātakamālā ( Vyāghrī-jātaka ) 1.17.

( *a* ) स तास्व् A.

( *b* ) व्यक्त° [ त्यक्त° ] Jāta° ( better ); °दुःखाः [ °धै° ] A; कृपात्मनः C(var.).

( *c* ) मृदाव् अप्य् अन्यदुःखे तु A.

( *d* ) कम्प्यन्ते C; विद्यन्ते [ क° ] A.

**84.** A 83; B—; C 90; Subh-v. 48.

( *a* ) नोदयाश्च विनाशाया A.

( *b* ) प्रभूते नाशितो ध्रु° A.

(*cd*) नो विनश्यति पद्मानि ह्यर्के स्वस्तं गतेऽपि च A.

उत्साहो रिपुवन् मित्रम् आलस्यं मित्रवद् रिपुः ।
अमृतं विषवद् विद्या- वनिताऽमृतवद् विषम् ॥ ८५ ॥

सर्पः क्रूरः खलः क्रूरः सर्पात् क्रूरतरः खलः ।
मन्त्रौषधिवशः सर्पः खलः केनोपशाम्यते ॥ ८६ ॥

---

**85.** A 84; B—; C 91; SRHt 236.6 ( a. Pratāparudra ), SMS.
( *a* ) रिपुवत् C.
( *c* ) उत्साहोऽमृतवद्विद्यात् C.
( *d* ) प्रमादो [ वनिता° ] C; ( मृत)वद् विषमङ्गना SRHt.

**86.** A 85; B 61; C 78; Cv 1052 ( Cv 2.8, CN 24, CS 3.32, CnT II 3.3, CnT III 2.7 and 7.54, CnT VI 28, CnT V 89, CnT VII 47, CPS 358.16 ), BhŚ 785, PD 301.21, MK(S) 16, SuM 10.8, SR 54.33 ( a. BhŚ ), SSB 315.34, SRK 22.10 ( a. ŚP ), IS 6899, Pras 16.11, LN(P) 69, DhN(P) 126, NKy(B) 100, ShD(T) 173 ( cf. 248 ).
( *a* ) भजङ्ग क्रुर खल क्रुर CS(var.) ( *sic !* ); सर्प CS(var.), क्रुरः ( both ) CS(var.); क्रूर (°रस्; °रं ) Cv(var.), CN(var.); खरः ( °र ) CS(var.); षर [ ख° ] CS(var.).
( *b* ) सर्प्य CS(var.); सर्प Cv(var.); तस्मात् [सर्पात्] CN(var.); कौरपाधिकः [ क्रू° ] Pras; क्रुरतरः CS(var.); क्रुरतल CS (var.); क्रुरः खरखरः CS(var.); कूरतरं CS(var.); खरः (°रा) CS(var.); खले Cv(var.).
( *c* ) मन्त्रेण शाम्यते सर्पो ( °र्पः MK[S] ) SR, SSB, SRK; मन्त्रैश्च (मन्त्रिण) शाम्यते ( श°; सा°; °न्ते ) सर्पो Cv(var.); मन्त्रौषयिवशः CN(var.); मन्त्रौषधीः वसे CS(var.); मन्त्रो° IS; °वशात् C, BhŚ, Pras; °वसात् C(var.); °वशी BhŚ ( var.); वशे ( °श ) CS(var.); सर्प CS(var.).
( d ) पुजनैव शाम्यते Cv(var.); न खलः शाम्यते कदा SR, SSB, SRK; दुर्जनः नैव ( केनः ) शाम्यते ( श°; °ति ) Cv(var.); खरः ( °र ) CS(var.); केन निवार्यते Cr (but Cv, CS, CN(var.) as above), SR, SSB, SRK, Pras; केन निवाध्यते CPS; कनापि शाम्यते MK(S); केन नशाम्यति Cv(var); °शाम्यति B, most Cāṇakya's verses.

बालार्कः शवधूमं च वृद्धस्त्री पल्वलोदकम् ।
आयुर्भयकरं नित्यं रात्रौ च दधिभोजनम् ॥ ८७ ॥
बालस्त्री मक्षिकातुण्डम् ऋषीणां च कमण्डलुः ।
स्रोतोऽम्बु मुखताम्बूलं नोच्छिष्टम् उपजायते ॥ ८८ ॥
राजाभिषेके शत्रुघ्ने कन्यादाने धनार्जने ।
विद्यासंग्रहणे रोगे कालक्षेपं न कारयेत् ॥ ८९ ॥
पक्षिणां बलम् आकाशं मत्स्यानाम् उदकं बलम् ।
दुर्बलस्य बलं राजा बालानां रुदितं बलम् ॥ ९० ॥

---

**87.** A 86; B 62; C9 2a; ŚP 628; NT 24; IS 7593. Cf. Cr 1962; cf. NŚ (OJ) 8.1.

( a ) शवधूनश्च B; पर्णधूमश्च C; प्रतधूमं च ŚP, NT.

( b ) वृद्धस्त्री NT; वृद्धस्ती ( for °स्त्री ) B; वृद्धं स्त्रीं ŚP.

( c ) आयुक्षयकरन् C; आयुष्कामो न सेवेत ŚP.

( cd ) रात्रौ दध्यन्नभुक्तिश्च आयुः क्षीणं दिने दिने NT.

**B adds after 62** two verses 63 and 64 not found in other sources :

4* वृद्धार्को होमधूमश्च बालस्त्री झर्झरोदकम् ।
आयुर्वर्धनमेते च निशायां क्षीरभोजनम् ॥63॥

5* सक्त्वार्द्रकदधिश्राणा तिलतैलानि निश्यदन् ।
त्यज्यते रूपवाक्श्रीभिः पुष्पितस्त्रीरतो यथा ॥64॥

**88.** A 87; B 65; C93.

( a ) °तुण्ड C; °तुण्डं A, C(var.).

( b ) कमण्डलुम् C.

( c ) स्रोतोम्बुफलताम्बूलं ( °फलं ता° ) C.

**89.** A 88; B 66; C 94; SRHt 191.44 ( a. MBh ).

( *c* ) विद्याग्रहणरोगेषु C; विद्याया ग्र° SRHt.

**90.** A 89; B 67; C 95; SRHt 238.33 ( a. Nīti ), NT 67, IS 7579, ( cf. LN (P) 118, DhN (P) 149, NKy (B) 146, NŚ (OJ) 2.10 ). Variant of Cr 475.

( a ) पक्षीणां NT; आकशो IS.

**अनभ्यासे विषं शास्त्रम्  अजीर्णे भोजनं विषम् ।**
**दरिद्रस्य विषं गोष्ठी  वृद्धस्य तरुणी विषम् ॥ ९१ ॥**

---

( b ) उ° व° tr. NT, IS.

( c ) बलो C.

( d ) बालस्य AC; रोदनं B, C, NT.

**C adds after 95** two verses 96 and 97 not found in other MSS of Vyās.; the first appears also in SRHt 54.40 ( a. Pratāparudra ), the second is not known to me :

**6*** उत्पलस्यारविन्दस्य  मत्स्यस्य कुमुदस्य च ।
एकयोनिप्रसूतानां  तेषां गन्धः पृथक् पृथक् ॥ 96 ॥

**7*** महताम् आश्रयं प्राप्य  लघिष्ठोऽप्य् अभिवर्धते ।
मेरुपर्वतम् आश्रित्य  सौवर्ण्यम् इव पक्षिणाम् ॥ 97 ॥

( *d* ) गन्धाः C.

( *g* ) मेरुपर्वतम् C(var.).

( *h* ) सौवर्णं C(var.).

**91.** A 90; B 68; C 98; SRHt 236.4 ( a. Daṇḍanītti ), Cr 463 (CV 4.15, CN 96, CS 1.15, CNŚlK, CNS 42, CvGt8.19, CnT II 27.9, CnT V 44, CnT VII 58, CPS 102.54 [ cf. Cr 1952—CvH 8.15, CvL I 8.24, CvL II 8.18; and Cr 1953–Cv Gt 4.17 ], H( HJ Km 22, HS Km 21, HM Km 22, HK Km 22, HH 3.10-1 ), ŚKDr *ad* विषः ( a. Cāṇakya ), SR 162.423 ( a. Cāṇakya ); SuB 3.24, IS 2836, Sama 1 अ 18, NT 54, Su 11 and 123, NŚ(OJ) 1.3, Ślt (OJ) 59, ( cf. ShD(T) 10 ). Cf. JSAIL 24.84.

( *a* ) दुरधीता ( दुरा° ) विषं ( °षः ) विद्या ( दराकं वृषं वि° or विषं कुपठिता वि° ) CS, Cv, CN; विद्या [ शा° ] Sama.

( *b* ) विषं व्याधिरुपेक्षिता ( °तः ) Cv, CN(var.); चाजी° CN (var.); अजीर्णं ( °ने CV[var.] ); CN(var.), CS(var.), CV(var,); भोजंन CV(var.); भो° वि° tr. CN (var.); वृष भाजनं [ भो° वि° ] CS(var.); वृषं CS(var.),

( *c* ) वि° गो° द° tr. CN, CS, H, SR, SuB, Sama; वृष CS (var.); गोष्ठिर् ( °ष्ठिः CvL I ) CS(var.), CvL I; गोष्ठि

शतेषु जायते शूरः सहस्रेषु च पण्डितः ।
वक्ता शतसहस्रेषु दाता भवति वा न वा ॥ ९२ ॥
चिबुके यस्य रोमाणि न च रोमाणि गण्डयोः ।
तेन मैत्री न कर्तव्या ह्यपि शून्या वसुन्धरा ॥ ९३ ॥

---

( °ष्ठी CV[var.] ) CS(var.), CV(var.); सभा [ गो° ] H, Sama; दरिद्रस्ये CS(var.).

( *d* ) वृद्धस्ये CS(var.); तरुणो ( °णि; °नि ) CS(var.); भावन [ त° ] CN(var.); न हि किं वि° CN(var.); वृष ( °षं ) CS(var.).

**C after 93** has two verses : 99 and 100; the first appears as No 29 of this Vyās. and 100 appears in Cr 2088 ( CNW 76, CNL 95 ), ŚKDr *ad* स्वभाव ( a. Cāṇakya ), TP 369, Balundarśane 85, IS 7303. The latter verse reads :

8* स्वभावो यादृशो यस्य न जहाति कदाचन ।
अङ्गारः शतधैतेन मलिनत्वं न मुञ्चति ॥

( c ) अङ्गारश्शतधौतोऽपि C.

**92.** A 91; B 69; C 101; SRHt 16.3 ( a. MBh ); Cr 1971 ( CNM 117, CNMN 84, CNI IV 120 ), Vet 12 ( p 155 ), SR 70.1, SSB 339,1, IS 6365, Su 163 and 285, Srm 130, ShD(M) 132.

( *b* ) सहस्रेष्वपि Su.

( *c* ) दशसहस्रेषु SR, SSB.

( *d* ) दाता जगति दुर्लभः C.

**93.** A 92; B 70; C 79; ŚP 1476; IS 2295.

( a ) हृदये [ चि° ] C; चिंबुके ŚP(MS); लोभानि [ रा० ] ŚP(MS)

( b ) न सन्ति च कपोलयोः A, C; भद्यसि ( वत्तसि ) [ रो° ] ŚP; गल्लयोः [ ग° ] ŚP.

( *c* ) तेन सख्यं न कुर्वीत ŚP ( but one MS as above ).

( d ) यदि निर्मानुषं जगत् ( व्रजेत् ) ŚP; अपि A; न हि [ ह्यपि ] C.

अग्निं प्रदीपं काष्ठं च रुधिरं मलिनाम्बरम् ।
मित्रस्वजनबन्धूनाम् अन्तरेण न संहरेत् ॥ ९४ ॥
अतिदीर्घो महामूर्खो मध्यमश्च विचक्षणः ।
वासुदेवं पुरस्कृत्य सर्वे वामनकाः शठाः ॥ ९५ ॥
कर्मापराधात् सत्त्वानां विनाशे समुपस्थिते ।
अनयो नयरूपेण बुद्धिम् आक्रम्य तिष्ठति ॥ ९६ ॥
आयुष्मान् प्राङ्मुखो भुञ्जात् धनवान् दक्षिणामुखः ।
पश्चिमे तु यशस्वी स्यान् न कदाचिद् उदङ्मुखः ॥ ९७ ॥
विद्वद्भिर् अभिसंबन्धाद् अधमो भाजनं भवेत् ।
पाषाणोऽपि मणिस्पर्शाज् जायते भूषणं परम् ॥ ९८ ॥

इति व्यासशतकं समाप्तम्[1] ।

1/ B has इति व्याससुभाषितं समाप्तम् ॥ श्रीगुरुभ्यो नमः ॥ महागणपतये नमः ॥



**94.** A 93; B 71; C 80.
( c ) मित्रसज्जन° C.
( d ) संचरेत् B.

**95.** A 94; B 72; C 81.
( b ) मध्ययस् तु C; महात्मनः [ वि° ] B.
( d ) सर्वे वा नतां गताः *(sic !) B contra metrum*; वामनकाश्शठाः C.

**96.** A 95; B—; C. 83.

**97.** A 96; B—; C 82. Cf. Mn 2.52.
( a ) प्राङ्मुखः खादन् C.
( c ) पश्चिमेन C; स्यात् A.
( d ) न च खादेद् [ न क° ] C.

**98.** A 97; B—; C 84; SRHt 230.5 ( a. Vyāsaśataka ).
*( b )* अर्थं हरति rest missing A; अर्थं वहति भारती C.
*( d )* भूषणं महत् A; भूषणार्हकम् C.

C has निमि and some texts add the following verse :

वन्दे मुनीन्द्रं विध्वस्तमोहध्वान्तं विकल्पषम् ।
सवितेवारविन्दं यो मनसः संप्रबोधते ॥

**B adds** at the end of the MS (73) the following unknown to me verse not found in other texts of Vyās :

9* प्रमाणं नैव जन्तूनाम् उत्तरक्षणजीवने ।
परमोच्छ्वासकाले यत् कर्तव्यं तत् सदा कुरु ॥

**A adds** at the end of MS two ( 98 and 99 ) verses not found in other texts of the Vyās; both these verses are well-known and deal with similar subject matters :

10* केतकीकुसुमं भृङ्गः खर्जमपि च सेवते ।
दोषाः किं नाम कुर्वन्ति गुणापहृतचेतसः ॥ 98 ॥

This verse appears also in ŚP 822, VS 724, SRK 185.8 (a. ŚP), SR 81.8 (a. VS), SSB 356.16, IS 7845, Any 79.35 and 126.150, Sub 11.9, VP 10.69.

( b ) खण्ड्यमानोऽपि से° ŚP, SRK, SR, SSB; पीड्यमानोऽपि से° VS.

( c ) दोषान् किन्नम पश्यन्ति B.

11* गुणाः कुर्वन्ति दूरत्वं दूरेऽपि वसतां सताम् ।
केतकीगन्धमाघ्राय षट्पदो याति दूरतः ॥ (99)

This verse appears also in Cr 343 (CS 1.45, CL 7.2, CNI I 41, CNG 41, CNT IV 187, CnT II 11.7, CnT III 7.29, CnT, V 51, CKl 34), MK (MK(P) 39, MK(S) 40, MK(GOS) 42, ŚP 290, SR 81.1 ( a. ŚP ), SSB 355.2, SRK 52.1 (a. Prasaṅgaratnāvalī), IS 2128, ShD (T) 138, VŚ (T) 6, SRN(T) 8 cf. Dhammapada 54.

( *a* ) गुणा CS(var.), कुर्वन्त्य दुल्लत्वं CS(var.); कुर्वन्त्य दूरत्वं (°रे°) C(var.); इरत्वं CNI I.

( b ) दूरेषु B; दूरेदूपि ( *sic !* ) CS(var.) ( hypermetric ); वसता CS(var.).

( *c* ) केटकी° CS(var.).

( d ) स्वयं गच्छन्ति (°ति CL, CS[var.]; यान्ति च CL[var.]) षटपदाः ( सट्° CL(var.); खट्° CS[var.]; °पदा or °पदः CL[var.], CS[var.]) all other texts; स्वयमायान्ति षटपदा (°दाः ) CL(var.), MK, ŚP, SR, SSB.

**C adds** after 86 one verse (87) not found in other texts of Vyās, but a well-known one; it, was borrowed from the Hitopadeśa.

**12*** महानप्यल्पतां याति निर्गुणे गुणवानपि ।
आधाराधेयसंबन्धात् गजेन्द्र इव दर्पणे ॥ 87 ॥

It appears in H(HJ 3.13, HS 3.12, HrM 3.12, HP 3.12, HN 3.12, HH 75.2–3, HC 99.2–3), SR 164.498 (a. H.). SSB 496.498, IS 4760, Kt 102, KtR 102, SS(OJ) 309.

( *a* ) अपतामेपि SS.

( *b* ) निर्गुणो H(var.); गुणविस्तरः all texts but C.

( c ) आधाराधेनुस्वभवत्वाद् SS(OJ); आधाराधेयभावेन all other texts.

# APPENDIX I[1]

## ADDITIONAL VERSES ATTRIBUTED IN THE SŪKTIRATNAHĀRA TO VYĀSAŚATAKA

1. अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वकालं नातिवर्त्तन्ते तथा कर्माणि देहिनाम् ॥
49.6=MBh(Bh) 12.174, 12 and 13.7.23 and Cr 11.

2. अदीर्घदर्शिभिर्मूढैः क्रूरैरैन्द्रियकैरपि ।
हसद्भिः क्रियते कर्म रुदद्भिरनुभूयते ॥ 49.3

3. अध्रुवेण शरीरेण प्रतिक्षणविनाशिना ।
ध्रुवं यो नार्जयेद् धर्मं स शोच्यो मूढचेतनः ॥
29.10 = VCvr 13.1[2]

4. अहन्यहनि भूतानि सृजत्येव प्रजापतिः ।
अद्यापि न सृजत्येकं योऽर्थिनं नावमन्यते ॥223.5

5. अहो कुटिलबुद्धीनां दुर्ग्राह्यमसतां मनः ।
अन्यन्मनसि कण्ठेऽन्य- दन्यदोष्ठपुटे स्थितम् ॥41.18

6. आकारमात्रविज्ञात- संपादितमनोरथाः ।
धन्यास्ते ये न शृण्वन्ति दीनानां प्राणिनां गिरः ॥
215.1 = BhPr 91

7. इदं कृतमिदं कार्यम् इदमन्यत् कृताकृतम् ।
एवमीहासमायुक्तं कृतान्तः कुरुते वशे ॥
58.6 = MBh(Bh) 12.169.19

8. कायस्थेनोदरस्थेन मातुरामिषशङ्कया ।
अन्त्राणि यन्न भुक्तानि तस्य हेतुरदन्तता ॥140.3

---

1) For explanation see page ( xxxvi ) para 12.

2) SRHt 29.11 = Vyās. 23

9. कुसुमस्तवकस्येव द्वयी वृत्तिर्मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥
136.2 [3] = BhŚ 34 and Cr 293

10. गुणवत्सु गुणाल्पोऽपि याति विस्तीर्णतां नरः ।
पतितः स्वादुविमले तैलबिन्दुरिवाम्भसि ॥
230.4 [4]

11. तप्यते याति सन्धानं द्रवीभवति नम्यते ।
मृदु दुर्जनचित्तेन किं लोहमुपमीयते ॥42.32

12. तेजसा सह जातानां वयः कुत्रोपयुज्यते ।
बालस्यापि रवेः पादाः पतन्त्युपरि भूभृताम् ॥62.22

13. न कालो दण्डमुद्यम्य शिरः कृन्तति कस्यचित् ।
कालस्य बलमेतावद् विपरीतार्थदर्शनम् ॥
58.7 = MBh(Bh) 2.12,11

14. न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये [5] ।
कर्मपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥
49.8 = MBh(Bh) 5.38, 30 and 12.168, 21

15. नीचः प्रकृतितीव्रत्वान् मानितोऽपि च बाधते ।
शिरसि स्थाप्यमानोऽपि दशत्येव भुजङ्गमः ॥
43.40 [6]

16. परनिन्दा जन्मफलं परव्यापत्तिरुत्सवः ।
परदोषोपलंभश्च खलानां निधिदर्शनम् ॥41.28

17. मा तात वृद्धान् परिभूः शिक्षस्वागमयस्व च ।
अहेरिव हि धर्मस्य सूक्ष्मा दुरधिगा गतिः ॥
190.31

---

3) SRHt 163.3 = Vyās 80
4) SRHt 230.5 = Vyās 98
5) SRHt has जाळ्यमसमृद्धये
6) SRHt 43.41 = Vyās 22

18. यं यमिच्छेद् यथाकामं तं तमेव तथाप्नुयात् ।
यदि न स्यात् पराधीनं पुरुषस्य क्रियाफलम् ॥ 49.7

19. यच्छ्रुतं न विरागाय न धर्माय न शान्तये ।
सुबद्धमपि शब्देन काकवाशितमेव तत् ॥ 28.7

20. यथा छायातपौ नित्यं सुसंबद्धौ निरन्तरम् ।
तथा कर्म च कर्ता च संबद्धौ सर्वजन्तुषु ॥

49.4 = MBh(Bh) 13.1, 68, P(PP 2.136, Pts 2.147, PtsK 2.136, PM 2.47), PdP, Bhūmikh. 81.51.

21. यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥

49.5 = MBh(Bh) 12.174, 16 and 13.7, 22, P(PT 2.106, PTem 2.95, PP 2.135, Pts 2.155, PtsK 2.134, PT2 2.95, PM 2.46), Cr 806, PdP Bhūmikh. 81.47, GP 1.113, 53-4

22. यस्तु वेदे च वाक्ये च ग्रन्थधारणतत्परः ।
न च ग्रन्थार्थतत्त्वज्ञस् तस्य तद्धारणं वृथा ॥29.9[7]

23. विषस्य विषयाणां च दूरमत्यन्तमन्तरम् ।
उपभुक्तं विषं हन्ति विषयाः स्मरणादपि ॥

259.4 = Cr 1955, BhŚ 751

24. सदृशात् पुरुषं सद्यः पातयन्तीम् अधस्तराम् ।
कथयन्ति कथं प्राज्ञा याच्ञां लाघवकारिणीम् ॥223.4

25. समाश्रयबलादेव गरुडं यान्तमध्वनि ।
पिनाकपाणिपाणिस्थः कुशलं पृष्टवानहिः ॥230.3[8]

---

7) SRHt 29.11 = Vyās. 23

8) SRHt 230.4=Appendix Io and SRHt 230.5=Vyās 98.

# APPENDIX II[1]

## ADDITIONAL VERSES ATTRIBUTED IN THE SŪKTIRATNAHĀRA TO VYĀSA

1. अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य च सञ्चयम् ।
अवन्ध्यं दिवसः कुर्याद् दानाध्ययनकर्मसु ॥
187.2 = Cr 15, HJ 2.9, GP 1.113,8.

2. अनुगन्तुं सतां वर्त्म यदि कृत्स्नं न शक्यते ।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति ॥187.1

3. गृहमध्यनिखातेन धनेन रमते यदि ।
स तु तेनानुमानेन मेरुणा किं न जीव्यते ॥217.8

4. द्वावम्भसि विनिक्षेप्यौ गाढं बद्ध्वा गले शिलाम् ।
धनिनं चाप्रदातारं दरिद्रं चातपस्विनम् ॥
187.4 = MBh(Bh) *ad* 5. 33.54 (180*).

5. प्रावृण्मेघस्य मालिन्ये दोषः को भूरिवर्षिणः ।
शारदाभ्रस्य शुद्धत्वं वद कुत्रोपयुज्यते ॥
215.3[2]

6. यदशक्यं न तच्छक्यं यच्छक्यं शक्यमेव तत् ।
नोदके शकटं याति न नौर्वा गच्छति स्थले ॥
178.3 = P(PT 2.20, PTem 2.20, PS 2.15, PN 1.13, PRF 2.8), HJ 1.92

7. स एवैकधुरो नृणां यः कश्चित् त्यागवारिणा ।
निमार्ष्टि प्रार्थितः पांसु धूसरं मुखमर्थिनाम् ॥215.4

8. सेतुं दृष्ट्वा समुद्रस्य भ्रूणहा गुरुतल्पगः ।
मुच्यते सर्वपापेभ्यः कृतघ्नोऽपि विशुध्यति ॥221.2

---

1) For explanation see page ( xxxvi ) para 12.

2) Most of the texts in which this verse also occurs (ŚP 768, SR 211.1, SSB 590.1, Pad 105.75, SRK 172.6, RJ 237 begins with प्रावृषेण्यस्य.

# APPENDIX III[1]

## CORRELATION OF THE PRIMARY AND ANCILLARY SOURCES AND THE VYĀSA-SUBHĀṢITA-SAṀGRAHA

| A | B | C | Vyās |
|---|---|---|---|
| 1 | 1 | 1 | 1 |
| 2 | 2 | 2 | 2 |
| 3 | 3 | 3 | 3 |
| 4 | — | 4 | 4 |
| 5 | — | 5 | 5 |
| 6 | — | 7 | 7 |
| 7 | — | 8 | 8 |
| 8 | — | 9 | 9 |
| 9 | — | 10 | 10 |
| 10 | — | 13 | 11 |
| 11 | — | 11 | 12 |
| 12 | — | 17 | 13 |
| 13 | — | 14 | 14 |
| 14 | — | 15 | 15 |
| 15 | 4 | 16 | 16 |
| 16 | 5 | 6 | 6 |
| 17 | 6 | 12 | 17 |
| 18 | 7 | 85 | 18 |
| 19 | 8 | 18 | 19 |
| 20 | 9 | 19 | 20 |
| 21 | 10 | 20 | 21 |
| — | 11 | 21 | 22 |
| 22 | 12 | 22 | 23 |
| 23 | 13 | 86 | 24 |
| 24 | 14 | 23 | 25 |
| — | 15 | 24 | 26 |

1) For explanation see page ( xxxvi ) para 12.

| A | B | C | Vyās |
|---|---|---|---|
| 25 | 16 | 25 | 27 |
| 26 | 17 | 26 | 28 |
| 27 | 18 | 99 | 29 |
| 28 | 19 | 27 | 30 |
| 29 | 20 | 28 | 31 |
| 30 | 21 | 29 | 32 |
| 31 | 22 | — | 33 |
| 32 | 23 | 30 | 34 |
| 33 | 24 | 31 | 35 |
| 34 | 25 | 32 | 36 |
| 35 | 26 | 33 | 37 |
| 36 | 27 | 34 | 38 |
| 37 | 28 | 35 | 39 |
| 38 | 29 | 63 | 40 |
| 39 | 30 | 37 | 41 |
| 40 | 31 | 38 | 42 |
| 41 | 32 | 39 | 43 |
| 42 | — | 40 | 44 |
| 43 | 33 | 41 | 45 |
| 44 | 34 | 42 | 46 |
| 45 | 35 | 44 | 48 |
| 46 | — | 43 | 47 |
| 47 | 36 | 45 | 49 |
| 48 | 37 | 46 | 50 |
| 49 | 38 | 47 | 51 |
| 50 | 39 | 48 | 52 |
| 51 | 40 | 49 | 53 |
| 52 | — | 52 | 54 |
| 53 | 41 | 53 | 55 |
| 54 | 42 | 50 | 56 |
| 55 | 44 | 54 | 58 |
| 56 | 43 | 51 | 57 |
| 57 | 45 | 55 | 59 |
| 58 | 46 | 56 | 60 |
| 59 | 47 | 57 | 61 |

| A | B | C | Vyās |
|---|---|---|---|
| 60 | 48 | 58 | 62 |
| 61 | 49 | 58a | 63 |
| 62 | 50 | 59 | 64 |
| 63 | 51 | 60 | 65 |
| 64 | 52 | 61 | 66 |
| 65 | 53 | 62 | 67 |
| 66 | 54 | 63 | 68 |
| 67 | 55 | 64 | 69 |
| — | — | 65 | 1* |
| — | — | 66 | 2* |
| 68 | 56 | 67 | 70 |
| 69 | 57 | 68 | 71 |
| 70 | 57a | 69 | 72 |
| 71 | 60 | 72 | 73 |
| 72 | 58 | 70 | 74 |
| 73 | 59 | 71 | 75 |
| 74 | — | 73 | 76 |
| 75 | — | 74 | 77 |
| 76 | — | — | 3* |
| 77 | — | 77 | 78 |
| 78 | — | 75 | 79 |
| 79 | — | 76 | 80 |
| 80 | — | 89 | 81 |
| 81 | — | 92 | 82 |
| 82 | — | 88 | 83 |
| 83 | — | 90 | 84 |
| 84 | — | 91 | 85 |
| 85 | 61 | 78 | 86 |
| 86 | 62 | 92a | 87 |
| — | 63 | — | 4* |
| — | 64 | — | 5* |
| 87 | 65 | 93 | 88 |
| 88 | 66 | 94 | 89 |
| 89 | 67 | 95 | 90 |

1. C 99, see above Vyās 29

| A | B | C | Vyās |
|---|---|---|---|
| — | — | 96 | 6* |
| — | — | 97 | 7* |
| 90 | 68 | 98 | 91 |
| — | — | 100[1] | 8* |
| 91 | 69 | 101 | 92 |
| 92 | 70 | 79 | 93 |
| 93 | 71 | 80 | 94 |
| 94 | 72 | 81 | 95 |
| 95 | — | 83 | 96 |
| 96 | — | 82 | 97 |
| 97 | — | 84 | 98 |
| — | 73 | — | 9* |
| 98 | — | — | 10* |
| 99 | — | — | 11* |
| — | — | 87 | 12* |

# श्लोकानुक्रमणिका[1]



1) N refers to footnotes.

## ADDENDA AND CORRIGENDA

p. 3. footnote to 9 ( *b* ) line 2 : read "द्विविध्म" instead of "द्विविश्य".

p. 4. footnote to 11 ( *d* ) line 2 : read "om" instead of "on".

p. 5. footnote to 12 ( *c* ) line 1 : read "भेदम्" instead of "ये—".

p. 7. footnote to 18 line 1 : add after "C 85"— "SS( OJ ) 443".

p. 8. footnote to 23 ( *b* ) line 1: read "लम्बते" instead of "लन्बते".

p. 23. footnote to 59 ( *b* ) read "बलीष्मते" instead of "बलीष्यले".

p. 28. footnote to 72 line 8 instead of "( Later a. P )" read : "( latter a. P ), SRHt 237. 18 *cd/ab* ( a. MBh ), Sub 78, Sama 1 क 72 and 2 क 9, VP 7. 18 and 9. 44".